तथा च मनुना स्मर्यते—

"श्रावण्यां पौर्णमास्यां च चोपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् " इति ॥

आपस्तम्बोऽप्याह—"श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदर्धपञ्चमाश्चतुरो मासानित्येके " इति । श्रावणी-पौष्यो पौर्णमास्योर्मध्यकालेऽपि प्रतिदिनं पूर्वाह्ने च शरीरवृक्षादिच्छायासु संभिन्नासु मिलितासु सतीषु नाधीयीत । प्रातःकाले सूर्योदये सति च्छायासु पृथक्पृथग-भिव्यक्तासु प्रारभेत । सायंकाले सूर्यास्तमयात्पूर्वं छायासु विविक्तासु सतीष्वेवा-ध्ययनं परित्यजेत् । यदा मेघोऽप्यूह्ळ आधिक्येन प्रसृतः सान्द्रो भवति तदा नाधी-यीत । अपर्ताविस्यत्रापशब्दो वर्जनार्थः । स्वकीयमृतुं श्रावणभाद्रपदमासद्वयरूपं वर्ज-यित्वा प्रवृत्तोऽपर्तुः । तादृशे वर्षे प्रवृत्ते सत्यकालवृष्टिं निमित्तीकृत्य त्रिरात्रं वैदि-केनाध्यायेन वेदपाठेनान्तरियात् । तिसृषु रात्रिषु वेदपाठस्यान्तरायं कर्तव्यं । वैदिकेनेति विशेषणादार्षाणां व्याकरणादीनामङ्गानामध्ययनमभ्यनुज्ञायते । अत्र स्मृति-कारा आर्द्रादिज्येष्ठान्तस्य त्रयोदशनक्षत्रपरिमितस्य कालस्य वृष्टिकालत्वमभ्युपेत्य ततोऽन्यत्र वृष्टौ सत्यामकालवृष्टिनिमित्तं त्रिरात्राध्ययनवर्जनमिच्छन्ति । अस्मिन्नधी-यमाने स्वाध्याये कथां [ न ] वदेत लौकिकवार्तां न कुर्यात् । यद्वाऽस्मिन्प्रकृते महाव्रताध्ययनकाले लौकिकवार्तां परित्यजेत् । किंचास्य महाव्रतस्य पाठं रात्रौ न कुर्यात् । किंच महाव्रताभिज्ञोऽहमित्येवं जनमध्ये कीर्तिमपि नेच्छेत् । महाव्रतस्य गोप्यत्वात्तद्विषयाभिज्ञानमपि न प्रकटयेत् ।

उक्तनियमेनाध्ययने फलमाह—

तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यै
तदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति, इति ॥

इत्यैतरेयब्राह्मणारण्यककाण्डे पञ्चमारण्यके तृतीयाध्याये
तृतीयः खण्डः ॥ ३ ॥ ( १४ )

## इति बह्वृचब्राह्मणारण्यककाण्डे पञ्चमारण्यके
## तृतीयोऽध्यायः ॥ ३ ॥

इति वै पूर्वोक्तेनैव नियमेनाधीतं तत्कृत्स्नस्वाध्यायवाक्यं महाव्रतवाक्यं चैतस्य प्रकृतस्य कृत्स्नवेदप्रतिपाद्यस्य महतः सर्वगतस्य भूतस्य नित्यसिद्धस्य परमात्मनो नाम भवति । कृत्स्नस्य वेदस्य परमात्मप्रतिपादकत्वात्तन्नामत्वं युक्तम् । तत्प्रतिपाद-

१ ग 'षाणं' ।

कत्वं च कठैराम्नायते—" सर्वे वेदा यत्पदमामनन्ति " इति । विदन्त्यनेन परमात्मानमिति व्युत्पत्त्या वेदशब्दोऽपि तत्प्रतिपादकमेव ग्रन्थमाचष्टे । अतः कृत्स्नवेदस्य परमात्मनामत्वेनात्यन्तरहस्यमन्त्ररूपत्वाद्बहुविधनियमपुरःसरमध्ययनं युक्तम् । यः पुमानेतत्त्वाध्यायवाक्यं सर्वमेवमुक्तेनास्य परमात्मनो नामेति वेद विदित्वा च नियमेनैवाधीते स पुमानधीतवेदमुखेन परमात्मानं विदित्वा स्वस्य ब्रह्मत्वाधारकाज्ञाननिवृत्त्या स ब्रह्म भवति । वाक्याभ्यासस्तृतीयाध्यायसमाप्त्यर्थः पञ्चमारण्यकसमाप्त्यर्थः कृत्स्नारण्यककाण्डसमाप्त्यर्थश्च ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणारण्यकभाष्ये पञ्चमारण्यके तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥ ( १४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे बह्वृचब्राह्मणारण्यककाण्डभाष्ये पञ्चमारण्यके तृतीयोऽध्यायः ॥ ३ ॥

अथ शान्तिः ।

---

ॐ उदितः शुक्रियं दधे । तमहमात्मनि दधे । अनु मामैत्विन्द्रियम् । मयि श्रीर्मयि यशः । सर्वः सप्राणः संबलः । उत्तिष्ठाम्यनु श्रीः । उत्तिष्ठत्वनु माऽऽयन्तु देवताः । अदब्धं चक्षुरिषितं मनः । सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः । तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् । त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ।

*शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम्। मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम्। वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणी स्थ श्रुतं मे मा प्रहासीरनेनाधीतेन। अहोरात्रान्त्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः।

इत्युत्तरशान्तिः ॥

इति बह्वृचब्राह्मणारण्यककाण्डे पञ्चममारण्यकं समाप्तम् ॥ ५ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरपरावतारस्य वैदिकमार्गप्रवर्तकस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन सायणामात्येन विरचिते माधवीये वेदार्थप्रकाश ऐतरेयारण्यककाण्डभाष्ये पञ्चममारण्यकं समाप्तम् ॥ ५ ॥

( आदितः समष्ट्यङ्काः —आर० ५ अध्या० १८ ख० ७५ )

---

समाप्तिमगमदिदं सभाष्यमैतरेयारण्यककाण्डम्।

---

* इयमृग्बचित्पुस्तकेऽत्र नास्ति, सा च वाङ्म इत्यादिमन्त्रादनन्तरं लिखिताऽस्ति।